श्रीमङ्गलचण्डिकास्तोत्रं अथवा मङ्गलागौरीस्तोत्रम्
ॐ ह्रीं श्रीं क्लीं सर्वपूज्ये देवी मङ्गलचण्डिके ।
ऐं क्रूं फट् स्वाहेत्येवं चाप्येकविन्शाक्षरो मनुः ॥ १॥

पूज्यः कल्पतरुश्चैव भक्तानां सर्वकामदः ।
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ॥ २॥

मन्त्रसिद्धिर्भवेद् यस्य स विष्णुः सर्वकामदः ।
ध्यानञ्च श्रूयतां ब्रह्मन् वेदोक्तं सर्व सम्मतम् ॥ ३॥

देवीं षोडशवर्षीयां रम्यां सुस्थिरयौवनाम् ।
सर्वरूपगुणाढ्याञ्च कोमलाङ्गीं मनोहराम् ॥ ४॥

श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभाम् ।
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥ ५॥

बिभ्रतीं कबरीभारं मल्लिकामाल्यभूषितम् ।
बिम्बोष्टीं सुदतीं शुद्धां शरत्पद्मनिभाननाम् ॥ ६॥

ईषद्धास्यप्रसन्नास्यां सुनीलोल्पललोचनाम् ।
जगद्धात्रीञ्च दात्रीञ्च सर्वेभ्यः सर्वसम्पदाम् ॥ ७॥

संसारसागरे घोरे पीतरुपां वरां भजे ॥ ८॥

देव्याश्च ध्यानमित्येवं स्तवनं श्रूयतां मुने ।
प्रयतः सङ्कटग्रस्तो येन तुष्टाव शङ्करः ॥ ९॥

॥ शङ्कर उवाच ॥

रक्ष रक्ष जगन्मातर्देवि मङ्गलचण्डिके ।
संहर्त्री(संहर्त्रि) विपदां राशेर्हर्षमङ्गलकारिके ॥ १०॥

हर्षमङ्गलदक्षे च हर्षमङ्गलचण्डिके ।
शुभे मङ्गलदक्षे च शुभमङ्गलचण्डिके ॥ ११॥

मङ्गले मङ्गलार्हे च सर्वमङ्गलमङ्गले ।
सतां मङ्गलदे देवि सर्वेषां मङ्गलालये ॥ १२॥

पूज्या मङ्गलवारे च मङ्गलाभीष्टदैवते ।
पूज्ये मङ्गलभूपस्य मनुवंशस्य सन्ततम् ॥ १३॥

मङ्गलाधिष्ठातृदेवि मङ्गलानां च मङ्गले ।
संसार मङ्गलाधारे मोक्षमङ्गलदायिनि ॥ १४॥

सारे च मङ्गलाधारे पारेत्वं सर्वकर्मणाम् ।
प्रतिमङ्गलवारे च पूज्ये त्वं मङ्गलप्रदे ॥ १५॥

स्तोत्रेणानेन शम्भुश्च स्तुत्वा मङ्गलचण्डिकाम् ।
प्रतिमङ्गलवारे च पूजां कृत्वागतः शिवः ॥ १६॥

देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ।
तन्मङ्गलं भवेच्छश्वन्न भवेत् तदमङ्गलम् ॥ १७॥

प्रथमे पूजिता देवी शम्भुना सर्वमङ्गला ।
द्वितीये पूजिता देवी मङ्गलेन ग्रहेण च ॥ १८॥

तृतीये पूजिता भद्रा मङ्गलेन नृपेण च ।
चतुर्थे मङ्गले वारे सुन्दरीभिश्च पूजिता ।
पञ्चमे मङ्गलाकाङ्क्षैर्नरैर्मङ्गलचण्डिका ॥ १९॥

पूजिता प्रतिविश्वेषु विश्वेशैः पूजिता सदा ।
ततः सर्वत्र सम्पूज्य सा बभूव सुरेश्वरी ॥ २०॥

देवादिभिश्च मुनिभिर्मनुभिर्मानवैर्मुने ।
देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ॥ २१॥

तन्मङ्गलं भवेच्छश्वन्न भवेत्तदमङ्गलम् ।
वर्द्धन्ते तत्पुत्रपौत्रा मङ्गलं च दिने दिने ॥ २२॥

॥ इति श्री ब्रह्मवैवर्ते द्वितीये प्रकृतिखण्डे
नारद नारायणसंवादे मङ्गलोपाखाने तत्स्तोत्रादिकथनं नाम
चतुश्चत्वारिंशत्तमोऽध्याये मङ्गलचण्डिका स्तोत्रं सम्पूर्णम् ॥